THE

# KÂSHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

**132.**

( Veda Section, No. 8. )

महर्षिशौनकोक्तम् ।

# चरणव्यूहसूत्रम् ।

वैदिकशिरोमणि आचार्यमहिदासकृत-
भाष्यसहितम् ।






PUBLISHED BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

THE

# KASHI SANSKRIT SERIES

( *HARIDAS SANSKRIT GRANTHAMALA* )

# 132.

( Veda Section No. 8. )

THE

# Charaṇavyuha Sūtra

OF

# S'AUNAKA

WITH THE COMMENTARY OF MAHIDĀSA

*Edited with Introduction and Critical notes etc.,*

BY

VEDĀCHĀRYA

PT. ANANTARĀM DOGĀRĀ S'ĀSTRI.

PUBLISHED BY

JAYA KRISHNA DÂS HARI DÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benares City.

1938

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशी-संस्कृत-सीरिज़्पुस्तकमालायाः

१३२

वेदविभागे (८) अष्टमं पुष्पम् ।

महर्षिशौनकोक्तम्

# चरणव्यूहसूत्रम् ।

वैदिकशिरोमणि आचार्यमहिदासकृत

भाष्यसहितम् ।

'वेदाचार्य' डोगरा-अनन्तरामशास्त्रिणा

टिप्पण्यापरिष्कृत्य संशोधितम् ।

प्रकाशकः—

जयकृष्णदास—हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस

विद्याविलास प्रेस, बनारस सिटी ।

१९९५

श्रीसद्गुरवे नमः ।

# भूमिका ।

श्रीविश्वेश्वरकृपयाऽद्य चिरत्नो निबन्धः 'चरणव्यूह' नामा सर्वदेशीयैर्ऋग्वेदि-यजुर्वेदि-सामवेदि-अथर्ववेदिभिः समाहतो यथानाम प्रमाणित वेदराशेः चतुर्विभाग, वेदानां विस्तार, आचार्यानुपूर्वी, शाखा-सूत्रादिभेद, जटादि विकृति, ऋग्यजुर्गानादिसङ्ख्या, मन्त्र-पद-वेष्टनादिसङ्ख्या, एकपदाद्विपदादिभेद, हवने-अध्ययने ऋक्परिमाण, पारायणविध्यादि विषयख्यापकः पुनर्मुद्रापयित्वा प्राकाश्यंनीतः ।

निर्माताऽस्य महर्षि शौनकाचार्यः । भाष्यकर्ताऽस्य वैदिकशिरोमणिराचार्यप्रवरो महिदासशर्मा ।

एष चरणव्यूहः पुरा विद्याविलासयन्त्रालये शिलाक्षरयन्त्रालये च मुद्रापयित्वा प्रकाशितोऽप्यति अशुद्ध इतिपुनरस्य परिशोधनपूर्वकम्मुद्रापणमभिलष्यद्भिः काशिक-चौखम्बा-पुस्तकालयाध्यक्षैर्जयकृष्णदासगुप्तमहोदयैरभ्यर्थितोऽहं सहायकपुस्तके आसाद्य संशोध्य टिप्पण्यासमलमकाष प्रार्पयञ्च तस्मै पुनर्मुद्रापयितुम् ।

अस्य संशोधने-प्रथमं 'महथापुस्तकालयीयं' अस्मदीयमतिप्राचीनं पुस्तकं द्वितीयं श्रीविनायकशास्त्रि बहेडे महोदयीयं पुस्तकमिति विदाङ्कुर्वन्तु भवन्तः ।

अस्मिन्महतिकार्ये पर्वतीय श्रीमद्भिः पं० गङ्गादत्त 'घनपाठी' महोदयैरष्टानां विकृतीनां प्रदानेन कृतं साहाय्यकं तथा ऋग्वेदिवर्यैः श्रीमद्भिः रामचद्र अठावले महोदयैः 'ऐतरेयब्राह्मणादि' पुस्तकप्रदानादिभिः कृतं साहाय्यकं पुनर्पुनः धन्यवादपूर्वकं स्मरामि ।

आशासे चायं निबन्धः पठनपाठनप्रणालिकायां प्रचार्य तत्तद्विद्यालयप्रधानाध्यक्षाः प्रकाशकसमुत्साहं वर्धयिष्यन्तीति ।

| | |
|---|---|
| डोगराभवनम्<br>मीरघाट, काशी | श्रीमतामनुचरः-<br>अनन्तरामडोगराशास्त्री |

श्रीसद्गुरवे नमः ।

अथ शौनकोक्तम्—

# चरणव्यूहपरिशिष्टं सभाष्यं प्रारभ्यते ।

श्रीगणेशाय नमः ।

अथातश्चरणव्यूहं व्याख्यास्यामः ॥ १ ॥

( नत्वा श्रीशमुमेशं च गणेशं श्रीयुतं गुरुम् ।
शाखादेरिदमाख्यानं क्रियतेऽन्वेष्य यत्नतः ॥ १ ॥
यथाऽनादिर्हरिः ख्यातो निदानं जगतां परम् ।
तथा वेदोऽपि शास्त्राणां स्मृत्यादीनां महाशयः ॥ २ ॥
तमगाधं च को वेत्ति विस्तीर्णत्वं विनेश्वरम् ।
तस्मात्सङ्क्षेपतो वक्ष्ये वैदिकादिमुदे मुदा ॥ ३ ॥ )
ओमित्येकाक्षरं ब्रह्म नादबिन्दुकलात्मकम् ।
त्रिदेवत्वं त्रिमात्रं च स्फुटं विष्णुं सनातनम् ॥ ४ ॥
तं सर्वज्ञं जगत्सेतुं परमात्मानमीश्वरम् ।
वन्दे नारायणं देवं निरवद्यं निरञ्जनम् ॥ ५ ॥
कृष्णद्वैपायनं वन्दे गुरुं वेदमहानिधिम् ।
येन चरणव्यूहेषु शाखाभेदमितं कृतम् ॥ ६ ॥
तच्छिष्यं शौनकगुरुं वेदज्ञं लोकविश्रुतम् ।
नत्वा तु शाकलाचार्यं तथैव चाश्वलायनम् ॥ ७ ॥
एवं परम्पराप्राप्तं बालकृष्णं महागुरुम् ।
यस्य प्रसादाद्व्याख्यामि चरणव्यूहसञ्ज्ञकम् ॥ ८ ॥

'अथ'शब्दो मङ्गले प्रस्तावे च । 'अथ'शब्दः पूर्वमेव मङ्गलार्थ इत्यर्थः । अतः हेत्वर्थः । चरणव्यूहः । वेदराशेः चतुर्विभागाचरण

उच्यते। तस्य व्यूहः समुदायः। चतुर्वेदानां समुदायं व्याख्यास्याम इत्यर्थः। कथमेकवेदः? तदुक्तमारण्यके-"सर्वे वेदा सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्" (ऐ० आर० २ खं० १०) इति। तस्य चतुर्विभागाः कृताः। तथा चोक्तं द्वादशस्कन्धे षष्ठाध्याये भागवते—

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैः प्रभुः।
सव्याहृतिकान्त्सोङ्कारांश्चातुर्होत्र(१)विचक्षणाः॥ १॥
पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान्।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन्॥ २॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः॥ ३॥
क्षीणायुषः क्षीणसत्वान्दुर्मेधान्वीक्ष्य कालतः।
वेदान्ब्रह्मर्षयो व्यस्यन्हृदिस्थाच्युतचोदिताः॥ ४॥
अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥ ५॥
पराशरात्सत्यवत्यामंशांशकलया विभुः।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥ ६॥
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव॥ ७॥
तासां स चतुरः शिष्यानुपाहूय महामतिः।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः॥ ८॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह।
वैशम्पायनसञ्ज्ञाय निगदाख्यं यजुर्गणम्॥ ९॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्।
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे॥१०॥

(१) 'विवक्षया' इ० पा०।

पैलः स्वां संहितामूच इन्द्रप्रमितये मुनिः।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥११॥
चतुर्द्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ १२ ॥
अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम्।
तस्य शिष्यो वेदमित्रः सौभर्यादिभ्य ऊचिवान् ॥ १३ ॥
शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम्।
वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ १४ ॥
जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम्।
बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ १५ ॥
बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम्।
चक्रे वालाय निर्भज्य कासाराश्चैव तां दधुः ॥ १६ ॥
बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ १७ ॥

अस्यार्थः—व्यासात्पैलः संहितां पदक्रमं च त्रिविधरूपं पठित्वा इन्द्रप्रमितये ददौ। इन्द्रप्रमितिश्चतुर्धा जटान्तं व्यासं कृत्वा बाष्कलादि अग्निमित्रान्तषट्शिष्येभ्यः स्वसुताय माण्डूकेयाय च ददौ। माण्डूकेयस्य शिष्यो वेदमित्रस्तस्य पुत्रेभ्यः सौभर्यादिभ्यस्तैः स्वसुताय शाकल्याय ददौ। शाकल्यः संहितापदक्रमजटादण्डरूपं च पञ्चधा व्यासं कृत्वा वात्स्यमुद्गलशालीयगोखल्यशिशिरेभ्यो ददौ। शाकल्यशिष्यो जातूकर्ण्यः सनिरुक्तां संहितां बलाकपैजवैतालविरजेभ्यो ददौ। पूर्वोक्तबाष्कलपुत्रो बाष्कलिः पूर्वोक्त सर्वशाखाभ्य उद्धृत्य वालखिल्याख्यसंहितां चक्रे। तां नाम्नीं वालखिल्यसंहितां वालायनिप्रभृतयोऽधीतवन्तः। इति पदेषु संहितात्वमितिकरणवेष्टनं, उदात्तानुदात्तस्वरितस्वराणां सिद्धिः, एतच्छन्दसां व्यासं विस्तारं श्रुत्वा सर्वपापैः प्रमुच्यत इत्यर्थः।

तथा च विष्णुपुराणे—

ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तु प्रचक्रमे ।
अथ शिष्यान्स जग्राह चतुरो वेदपारगान् ॥ १ ॥
ऋग्वेदश्रावकं पैलं सञ्जग्राह महामतिः ।
वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् ॥ २ ॥
जैमिनिः सामवेदस्य तथैवाथर्ववेदवित् ।
सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥ ३ ॥

तथा च गृह्यसूत्रम्—"सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या" (आ०गृ०सू०३अ०४खं०)इति । 'जानन्ति बाहवी'इत्यारभ्य 'माण्डूकेया'(आ०गृ०सू०३अ०४खं०)इत्यन्तं माण्डूकगणसमुदायः । 'गर्गी वाचक्नवी'इत्यारभ्य'शाङ्खायनम्'(आ० गृ० सू०३अ०४खं०)इत्यन्तेन शाङ्खायनगणः । एतेषां कौषीतकिब्राह्मणमारण्यकं शाङ्खायनसूत्रं चेति । 'ऐतरेयम्' इत्यारभ्य 'आश्वलायनम्'(आ०गृ०सू०३अ४खं०)इत्यन्ता आश्वलायनगणः । एषामैतरेयब्राह्मणमारण्यकमाश्वलायनसूत्रं चेत्यर्थः ॥१॥

**तत्र यदुक्तं चातुर्वैद्यं चत्वारो वेदा विज्ञाता भवन्ति॥२॥**

अस्मिन् ग्रन्थे यदुक्तं चातुर्वैद्यं तेन चत्वारो वेदा विज्ञाता भवन्ति ॥२॥

**तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति ॥ ३ ॥**

इति स्पष्टार्थः । "वेदा हि यज्ञार्थमभिप्रवृत्ताः" (श्रीलगधज्योतिष ७खं०) । तथा च विष्णुपुराणम्—

आद्यो वेदश्चतुष्पादः शतसाहस्रसम्मितः ।
ततो दशगुणः कृत्स्नो यज्ञोऽयं सर्वकामधुक् ॥ १ ॥
अत्रैव मत्सुतो व्यास अष्टाविंशतिमेऽन्तरे ।
वेदमेकं चतुष्पादश्चतुर्धा व्यभजत्प्रभुः ॥ २ ॥ इति ।

अस्यार्थः—आद्यो वेदो वेदविभागात्पूर्वकालीनो वेद-

श्चतुष्पादः(१) ऋगादिचतुष्टयसमूहरूपः। शतसाहस्रसम्मितः। "दश दश तच्छतं दशशतानि, तत्सासहस्रं तत्सर्वम्"इति श्रुतेः। अनन्तसङ्ख्याकः। "अनन्ता वै वेदा" इति श्रुतेः। ततो वेदास्प्रवृत्ता। कृत्स्नोऽयं दशगुणः—दशविधः। "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशुः सोम"(ऐ०आर०२ खं०१५) इति श्रुतेः। तथा च—"पञ्च वा एते महायज्ञा" इत्युपक्रम्य "ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ"इति श्रुतेश्च। वैतानिका गार्ह्याश्च दशयज्ञाः। अत्रान्तरे वैवस्वतमन्वन्तरे अष्टाविंशतिमे द्वापरयुगे इति शेषः। मत्सुतो व्यासः कृष्णद्वैपायन श्चतुर्धा व्यभजत्। ऋग्वेदादिरूपेण चतुर्धा विभक्तवान्। पाकयज्ञास्त्रिविधाः। अत्रगृह्यम्—"हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्माणि हुता" ( आ० गृ० सू० १ खं० ) इति। अत्र वृत्तिकृत्—अग्नौ हूयमाना 'हविष्यस्य जुहुयात्' इत्येवमादयो हुताः। अनग्नौ क्रियमाणा 'अथ बलिहरणम्' इत्येव मादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति 'ब्राह्मणान्भोजयित्वा' इति ब्रह्माणि हुताः इति। नित्याऽभ्यासो ब्रह्मयज्ञः पारायणं च। अत्र गृह्यसूत्रम्, ब्रह्मयज्ञखण्डे-यदचोऽधीते पय आहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिर्यदृचोऽधीते पयसः कुल्या अस्य पितॄन्त्स्वधा उपक्षरन्ति"(आ०गृ०सू०३अ०३खं०) इति ॥३॥

तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति ॥४॥

तत्र ऋग्वेदस्याष्टभेदा भवन्ति। शाकलाबाष्कलौ २, ऐतरेयब्राह्मणारण्यकौ ४, शाङ्खायनमाण्डूकौ ६, कौषीतकीयब्राह्मणारण्य-

(१) 'ऋग्यजुः सामाथर्वाणश्चत्वारो वेदाः साङ्गाः स शाखाश्चत्वारः पादा भवन्ति' (नृ०ता०उ० १—२)

काचित्यष्टभेदाः ८ । अन्येऽष्टभेदा यथा—

वेदा विकृतिशाखाश्च भेदस्तु त्रिविधस्तथा ।
पृथङ्नानाविधानेन व्यासेन कथितं पुरा ॥१॥ इति ।

अत्राष्टभेदेनाष्टस्थानेन वा विकृतिर्ग्राह्या। विकृतिस्तु अग्रे वक्ष्यामः । तस्माद्ब्रह्मयज्ञार्थे पारायणार्थे च ऋग्वेदस्याध्ययनं कर्त्तव्यम् ॥४॥

ततश्चतुष्पदेन वक्ष्यति—

चर्चा, श्रावकः, चर्चकः, श्रवणीयपारः ॥ ५ ॥

चर्चा-अध्ययनम् । तत्र पाणिनीयसूत्रे-"चिन्ति पूजि कथि कुम्बि चर्चश्च" । एभ्योऽङ्स्त्रियां भावादौ । चिति-स्मृत्याम् । पूजि-पूजायाम्। कथि-वाक्यप्रबन्धे। कुबि-आच्छादने। चर्च-अध्ययने। चुरादय इति । अष्टाध्यायीसूत्रे ताल्वोष्ठपुटव्यापारेण शब्दस्य श्रवणं क्रियते सा चर्चा । तदध्ययनस्य श्रावको गुरुः । तस्य चर्चकः शिष्यः। श्रवणीयपारः । श्रवणीयो वेदः, तस्य पारः-समाप्तिः । इति चतुष्पदेन अध्ययनं सूचितम् । अग्रे चतुष्पदेन चत्वारि पारायणानि सूचयति । तत्पारायणं द्विविधं, प्रकृति विकृति रूपम् । का प्रकृतिः? का विकृतिः? । प्रकृतिः संहिता । सा द्विविधा । रूढा, योगा । रूढा यथा-(१)"अग्निमीडे पुरोहितम्" इति । योगा यथा—"अग्निमीडे । ईडे पुरोहितम्"(२) । इति प्रातिशाख्ये द्वितीयपटले भाष्यकारेण व्याख्यातम् ॥५॥

---

(१) शुक्लयजुर्माध्यन्दिनीयसंहितोदाहरणम्—

हरिः ॐ समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम्॥ आस्मिन्हव्याजुहोतन ॥ १ ॥ इति ।

(२) क्रमोदाहरणम्-ॐ समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुवस्यत । दुवस्यतघृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथिम् ॥

अथ चतुष्पारायणं यथा—

क्रमपारः, क्रमपदः, क्रमजटः, क्रमदण्डश्चेति
चतुष्पारायणम् ॥ ६ ॥

क्रमशब्द उभयसंहिता वाच्यः । स कथम् ?

अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमम् ।
विलोमेपदवत्सन्धिरनुलोमे यथाक्रमम् ॥ १ ॥

यथाक्रमं यथा संहिता इत्यर्थः । अन्यच्च-वर्णक्रमः, 'अक्षरसमाम्नाय एव' इत्यारण्यके । "कथमभिष्टुयादित्यक्षरशः । चतुरक्षरशः । पच्छः । अर्द्धर्चशः । ऋक्शः इति" (ऐ०ब्रा०६पञ्चि० २खं०) ब्राह्मणम् । "भूयांसि तु समाम्नानात् व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति" (निरु०उ०६ अ०१खं०१३) इति नैरुक्ताः । क्रमः संहितावाची कथम् ? "पदप्रकृतिः संहिता" (निरु० पू०६खं०१७) इति नैरुक्तवचनात्सा क्रमरूपा इत्यर्थः । क्रमपदः । क्रमः संहिता तस्याः पदानि(१) । इति द्वे प्रकृतिपारायणे, द्वे विकृतिरूपे । विकृतिस्तु अष्टविधा भवन्ति । तच्च—

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥ १ ॥ इति ।

आसां मध्ये जटादण्डयोः प्राधान्यम् । तत्कथम् ? जटानुसारिणी शिखा । दण्डानुसारिणी माला, लेखा, ध्वजो, रथश्च । घनस्तूभयानुसारित्वात् । अस्याः नियमवाक्यानि व्याडीकृतजटापटले उदाहरणानि च ।

---

आस्मिन् । अस्मिन्हव्या । हव्याजुहोतन । जुहोतनेतिजुहोतन ॥ १ ॥ इति ।

(१) पदोदाहरणम्—

ॐ समिधेतिसम् । इधा । अग्निम् । दुवस्यत । घृतैः । बोधयत । अतिथिम् ॥ आ । अस्मिन् । हव्या । जुहोतन ॥ १ ॥ इति ।

तत्र जटावाक्यम्—

क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम् ।
अभ्यस्य पूर्वं च तथोत्तरे पदेऽवसानमेवं हि जटाभिधीयते ॥१॥

अस्यार्थः—क्रमे यथोक्तेसति "क्रमो द्वाभ्याम्" इत्यादुयुक्ते क्रमप्रकारे पदजातं, पदद्वयं वा, पदत्रयं वा द्विवारमभ्यसेत् । द्विवारं पठेत् । अभ्यासप्रकारः—उत्तरमेव पूर्वम् । क्रमवत्पदद्वयं गृहीत्वा पूर्वं नाम प्रथमं उत्तरपदमभ्यसेत् । तत उत्तरपूर्वपदयोः सन्धानद्वारा पूर्वं द्विरभ्यस्योत्तरे पदेऽवसानम् । एवं प्रकारेणाऽध्ययनं जटाभिधीयते, कथ्यते । हीति निश्चयार्थम् । उदाहरणेन दृश्यते 'अग्निमीडऽईडोग्निमाग्निमीडे । ईडेपुरोहितंपुरोहितमीडऽईडेपुरोहितम्' (१)इत्यादि ज्ञेयम् ।

अथ दण्डलक्षणम्—

क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् ।
अर्द्धर्चादेवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ २ ॥

(२)उदाहरणं यथा-'अग्निमीडे । ईडोग्निम् । अग्निमीडे । ईडेपुरोहितम् । पुरोहितमीडोग्निम्' इत्यादि ज्ञेयम् ।

---

(१) जटोदाहरणम्-ॐ समिधाग्निमग्निंसमिधासमिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुवस्यतदुवस्यताग्निमग्निन्दुवस्यत । दुवस्यतघृतैर्घृतैर्दुवस्यतदुवस्यतघृतैः । घृतैर्बोधयतबोधयतघृतैर्घृतैर्बोधयत । बोधयतातिथिमतिथिम्बोधयतबोधयतातिथिम् । अतिथिमित्यतिथिम् ॥

आस्मिन्नस्मिन्नास्मिन् । अस्मिन्हव्याहव्यास्मिन्नस्मिन्हव्या । हव्याजुहोतनजुहोतनहव्याहव्याजुहोतन । जुहोतनेतिजुहोतन ॥ १ ॥ इति ।

(२) दण्डोदाहरणम्—

ॐ समिधाग्निम् । अग्निंसमिधा । समिधाग्निम् । समिधेतिसम् ।

अथ मालालक्षणम्—

ब्रूयात्क्रमविपर्यासावर्द्धर्चस्यादितोऽन्ततः ।
अन्तं चादिं नयेदेवं क्रममालेति गीयते ॥ ३ ॥
माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ।
आवर्त्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः(१) ॥ ४ ॥

---

इधा । अग्निन्दुंवस्यत । दुवस्यताग्निह्समिधा । समिधाग्निम् । समिधेति- सम् । इधा । अग्निन्दुंवस्यत । दुवस्यतघृतैः । घृतैर्दुवस्यताग्निउस- मिधा । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुंवस्यत । दुवस्यत- घृतैः । घृतैर्बोधयत । बोधयतघृतैर्दुवस्यताग्निह्समिधा । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुंवस्यत । दुवस्यतघृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिम्बोधयतघृतैर्दुवस्यताग्निह्समिधा । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुंवस्यत । दुवस्यतघृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथिम् ॥

आस्मिन् । अस्मिन्ना । आस्मिन् । अस्मिन्हव्या । हव्यास्मिन्ना । आस्मिन । अस्मिन्हव्या । हव्याजुंहोतन । जुहोतनहव्यास्मिन्ना । आ- स्मिन् । अस्मिन्हव्या । हव्याजुंहोतन । जुहोतनेतिजुहोतन ॥१॥ इति ।

(१) मालोदाहरणम्—

ॐ समिधाग्निम् । अग्निह्समिधा । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुंवस्यत । दुवस्यताग्निम् । अग्निन्दुंवस्यत । दुवस्यतघृतैः । घृतैर्दुंवस्यत । दुवस्यतघृतैः । घृतैर्बोधयत । बोधयतघृतैः । घृतैर्बोध- यत । बोधयतातिथिम् । अतिथिम्बोधयत । बोधयतातिथिम् । अतिथि- मित्यतिथिम् ॥

आस्मिन् । अस्मिन्ना । आस्मिन् । अस्मिन्हव्या । हव्या-

अथ शिखालक्षणम्--

पदोत्तरां जटामेव शिखामार्याः प्रचक्षते(१) ॥ ५ ॥

अथ रेखालक्षणम्—

क्रमाद् द्वि त्रि चतुष्पञ्च पदक्रममुदाहरेत् ।
पृथक्पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात्(२) ॥ ६ ॥

अथ ध्वजलक्षणम्--

ब्रूयादादेः क्रमं सम्यगन्तादुच्चारयेद्यदि ।

---

स्मिन् । अस्मिन्हव्या । हव्याजुंहोतन । जुहोतनहव्या । हव्याजुंहोतन । जुहोतनेतिजुहोतन ॥ १ ॥ इति ।

(१) शिखोदाहरणम्—

ॐसमिधाग्निमग्निंसमिधासमिधाग्निन्दुवस्यत । समिधेतिसम् । इधा । अग्निन्दुवस्यतदुवस्यताग्निमग्निन्दुवस्यतघृतैः । दुवस्यतघृतैर्घृतैर्दुवस्यतदुवस्यतघृतैर्बोधयत । घृतैर्बोधयतबोधयतघृतैर्घृतैर्बोधयतातिथिम् । बोधयतातिथिमतिथिम्बोधयतबोधयतातिथिम । अतिथिमित्यतिथिम् ॥

आस्मिन्नस्मिन्नास्मिन्हव्या । अस्मिन्हव्याहव्यास्मिन्नस्मिन्हव्याजुंहोतन । हव्याजुंहोतनजुहोतनहव्याहव्याजुंहोतन । जुहोतनेतिजुहोतन ॥१॥ इति

(२) रेखोदाहरणम्—

ॐमधुनक्तम् । नक्तम्मधु । मधुनक्तम् । नक्तमुतोषसः । उषसऽउतनक्तम् । नक्तमुत । उतोषसः । उषसोमधुमत्पार्थिवंरजः । रजःपार्थिवम्मधुमदुषसः । उषसोमधुमत् । मधुमत्पार्थिवम् । मधुमदिति-मधु । मत् । पार्थिवंरजः । रजऽइतिरजः ॥

मधुद्यौरस्तुनःपिता । पितानोऽस्तुद्यौर्मधु । मधुद्यौः । द्यौरस्तु । अस्तुनः । नःपिता । पितेतिपिता ॥ १ ॥ इति ।

वर्गे च ऋचि वा यत्र पठनं स ध्वजः स्मृतः(१) ॥ ७ ॥

अथ रथलक्षणम्—

पादशोऽर्द्धर्चशो वाऽपि सहोक्त्या दण्डवद्रथः(२) ॥ ८ ॥

---

(१) ध्वजोदाहरणम्—

ॐविष्णोः कर्म्माणि । सखेतिसखा । कर्म्माणिपश्यत । य्युज्यःसखा । पश्यतयतः । इन्द्रस्ययुज्यः । यतोव्रतानि । पस्पशऽइतिपस्पशे । व्रतानिपस्पशे । व्रतानिपस्पशे । पस्पशऽइतिपस्पशे । यतोव्रतानि । इन्द्रस्ययुज्यः । पश्यतयतः । य्युज्यःसखा । कर्म्माणिपश्यत । सखेतिसखा । विष्णोःकर्म्माणि ॥ १ ॥ इति ।

(२) रथोदाहरणम् । रथो द्विविधः । पादशः अर्द्धर्चशश्च । प्रथमोऽयम्—

ॐसमिधाग्निम् । समिधेतिसम् । इधा । अग्निःसमिधा । घृतैर्बोधयत । बोधयतघृतैः । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुवस्यत । दुवस्यताग्निःसमिधा । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिम्बोधयतघृतैः । समिधाग्निम् । समिधेतिसम् । इधा । अग्निन्दुवस्यत । दुवस्यतघृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथिम् ॥ इति ।

द्वितीयोऽयम्—ॐ स्वस्तिनः । नःस्वस्ति । स्वस्तिनः । नःस्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोनःस्वस्ति । स्वस्तिनः । नस्तार्क्ष्यः । तार्क्ष्योनःस्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः । वृद्धश्रवाऽइन्द्रोनःस्वस्ति । स्वस्तिनः । नस्तार्क्ष्यः । तार्क्ष्योऽअरिष्टनेमिः । अरिष्टनेमिस्तार्क्ष्योनः स्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः । वृद्धश्रवाःस्वस्ति । स्वस्तिवृद्धश्रवाऽइन्द्रोनःस्वस्ति । स्वस्तिनः । नस्तार्क्ष्यः । तार्क्ष्योऽअरिष्टनेमिः । अरिष्टनेमिः स्वस्ति ।

स्वस्त्यरिष्टनेमिस्ताक्ष्र्योनः स्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः । वृद्धश्रवाःस्वस्ति । वृद्धश्रवाऽइतिवृद्ध । श्रवाः । स्वस्तिनः । नःस्वस्तिवृद्धश्रवाऽइन्द्रोनःस्वस्ति । स्वस्तिनः । नस्ताक्ष्र्यः । ताक्ष्र्योऽअरिष्टनेमिः । अरिष्टनेमिःस्वस्ति । अरिष्टनेमिरित्यरिष्ट । नेमिः । स्वस्तिनः । नःस्वस्त्यरिष्टनेमिस्ताक्ष्र्योनःस्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः । वृद्धश्रवाःस्वस्ति । वृद्धश्रवाऽइतिवृद्ध । श्रवाः । स्वस्तिनः । नःपूषा । पूषानःस्वस्तिवृद्धश्रवाऽइन्द्रोनःस्वस्ति । स्वस्तिनः । नस्ताक्ष्र्यः । ताक्ष्र्योऽअरिष्टनेमिः । अरिष्टनेमिःस्वस्ति । अरिष्टनेमिरित्यरिष्ट । नेमिः । स्वस्तिनः । नोबृहस्पतिः । बृहस्पतिर्नःस्वस्त्यरिष्टनेमिस्ताक्ष्र्योनःस्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः । वृद्धश्रवाःस्वस्ति । वृद्धश्रवाऽइतिवृद्ध । श्रवाः । स्वस्तिनः । नः पूषा । पूषाविश्ववेदाः । विश्ववेदाःपूषानःस्वस्तिवृद्धश्रवाऽइन्द्रोनः स्वस्ति । स्वस्तिनः । नस्ताक्ष्र्यः । ताक्ष्र्योऽअरिष्टनेमिः । अरिष्टनेमिःस्वस्ति । अरिष्टनेमिरित्यरिष्ट । नेमिः । स्वस्तिनः । नोबृहस्पतिः । बृहस्पतिर्दधातु । दधातुबृहस्पतिर्नःस्वस्त्यरिष्टनेमिस्ताक्ष्र्योनः स्वस्ति । स्वस्तिनः । नऽइन्द्रः । इन्द्रोवृद्धश्रवाः।वृद्धश्रवाःस्वस्ति । वृद्धश्रवाऽइतिवृद्ध। श्रवाः । स्वस्तिनः । नःपूषा । पूषाविश्ववेदाः । विश्ववेदाऽइतिविश्व । वेदाः ॥

स्वस्तिनः । नस्ताक्ष्र्यः । ताक्ष्र्योऽअरिष्टनेमिः । अरिष्टनेमिःस्वस्ति । अरिष्टनेमिरित्यरिष्ट । नेमिः । स्वस्तिनः । नोबृहस्पतिः। बृहस्पतिर्दधातु । दधात्वितिदधातु ॥ १ ॥ इति ।

अथ घनलक्षणम्—

जटामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत्।
अयं घन इति प्रोक्तः इत्यष्टौ विकृतीः पठेत्(१) ॥ ९ ॥

अन्यच्च घनस्य द्वितीयलक्षणम्—

अन्तात्क्रमं पठेत्पूर्वमादिपर्यन्तमानयेत्।
आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः ॥ १० ॥

इत्यष्टविकृतिलक्षणान्युक्तानि। अध्ययने संहितापारायणम् १, पदपारायणम् २, जटापारायणम् ३, क्रमदण्डपारायणञ्च ४, एतत्पारायणचतुष्टयमित्यर्थः ॥ ६ ॥

एतेषां शाखाः पञ्च विधा भवन्ति ॥ ७ ॥

एतेषां वेदपारायणानां पञ्च शाखा भवन्तीत्यर्थः ॥ ७ ॥

ताः का? इत्यत आह—

**आश्वलायनी, शाङ्खायनी, शाकला, बाष्कला, माण्डूकायनाश्चेति ॥ ८ ॥**

---

(१) घनोदाहरणम्—

ॐ समिधाग्निमग्निꣳसमिधासमिधाग्निन्दुवस्यतदुवस्यताग्निꣳसमिधासमिधाग्निन्दुवस्यत। समिधेतिसम्। इधा। अग्निन्दुवस्यतदुवस्यताग्निमग्निन्दुवस्यतघृतैर्घृतैर्दुवस्यताग्निमग्निन्दुवस्यतघृतैः। दुवस्यतघृतैर्घृतैर्दुवस्यतदुवस्यतघृतैर्बोधयतबोधयतघृतैर्दुवस्यंतदुवस्यतघृतैर्बोधयत। घृतैर्बोधयतबोधयतघृतैर्घृतैर्बोधयतातिथिमतिथिम्बोधयतघृतैर्घृतैर्बोधयतातिथिम्। बोधयतातिथिमतिथिम्बोधयतबोधयतातिथिम्। अतिथिमित्यतिथिम् ॥

आस्मिन्नस्मिन्नास्मिन्हव्याहव्यास्मिन्नास्मिन्हव्या। अस्मिन्हव्याहव्यास्मिन्नस्मिन्हव्याजुहोतनजुहोतनहव्यास्मिन्नस्मिन्हव्याजुहोतन। हव्याजुहोतनजुहोतनहव्याहव्याजुहोतन। जुहोतनेतिजुहोतन ॥१॥ इति।

इति प्रसिद्धाः ॥ ८ ॥

तेषामध्ययनम् ॥ ९ ॥

तेषां आश्वलायनीयादिशाखानां समानाध्ययनं सूचयति ॥९॥

अध्यायाश्च चतुःषष्टिर्मण्डलानि दशैवतु ॥१०॥

अध्यायाश्चतुःषष्टिः । 'अग्निमीडे' 'अयं देवाय' इत्यादि चतुःषष्टिरध्याया इत्यर्थः । मण्डलानि दशैव तु । 'अग्निमीडे' 'कुसुम्भक' इत्याद्युपाकर्मप्रसिद्धानीत्यर्थः ॥ १० ॥

वर्गाणां परिसङ्ख्यातं द्वे सहस्रे षडुत्तरे ।
सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् ॥
दशसप्तस्तु पठ्यन्ते सङ्ख्यातं वै पदक्रमम् ।

एकशतसहस्रं वा द्वित्रिपञ्चाशत्सहस्रार्द्धमेतानि चतुर्दशवासिष्ठानामितरेषां पञ्चाशीतिः क्रमकाले तु वेष्टव्यं चतुस्त्रिंशत्सहस्राणि तु द्विखण्डानां सहस्राणां द्वात्रिंशत षोडशोत्तरा। चत्वारिंशत्सहस्राणि द्वात्रिंशतश्चाक्षरसहस्राणि ।

ऋचान्दशसहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीतिपादश्चैतत्पारायणमुच्यते ॥
एकर्च एकवर्गश्च एकश्च नवकस्तथा ।
द्वौवर्गौ तु दूषृचौ ज्ञेयौ ऋक्त्रयश्च शतं स्मृतम् ॥
चतुर्ऋचां पञ्च सप्तमधिकं च शतं तथा ।
पञ्चर्चश्च द्विशत्युक्तं सहस्रं रुद्रसंयुतम् ॥
पञ्चचत्वार्यधिकं तु षडृचां च शतत्रयम् ।
सप्तर्चस्य शतं ज्ञेयं विंशतिश्चाधिका स्मृता ॥
अष्टर्चां तु पञ्चाशत्पञ्चाधिकं तथैव च ।
दशाधिकद्विसहस्र पञ्चशाखासु निश्चिता ॥
वर्गाः संज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः ।

एवं पारायणे प्रोक्ता ऋचा सङ्ख्येन न्यूनतः॥११॥

वर्गादि आऋचान्ताः सङ्ख्या वालखिल्यैर्विना ज्ञेया । षडुत्तरसहस्रद्वयवर्गा इत्यर्थः । सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् । दशसप्तसु पठ्यन्ते सप्तदशाधिकसहस्रसूक्तानीत्यर्थः। सङ्ख्यातं वै पदक्रमं एकं शतसहस्रं वा द्विपञ्चाशत्सहस्रादूर्ध्वमेतानि चतुर्दशपदानि वासिष्ठानामितरेषां पञ्चाशीतिः । एकलक्षद्विपञ्चाशत्सहस्रपञ्चशतचतुर्दश१५२५१४वासिष्ठानाम् । वासिष्ठगोत्रीयाणां 'इन्द्रोतिभिः'( अष्ट० ३अ० ३वर्ग२३ ) एकसप्ततिपदात्मको वर्गो नास्ति । इतरगोत्रीयाणां पञ्चाशीत्यधिक ८५ पदानीत्यर्थः । अथ वालखिल्यसहिता पदसङ्ख्योच्यते—

लक्षैकं तु त्रिपञ्चाशत्सहस्रं शतसप्तकम् ।
पदानि च द्विनवतिः प्रमाणं शाकलस्य च ॥ १ ॥

एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतद्विनवति१५३७९२श्चाधिकानि पदानीत्यर्थः ।

पदानि वालखिल्यस्य ह्यर्कसङ्ख्याशतानि च ।
अधिकानि तु सप्तैव वर्गा अष्टादश स्मृताः ॥ १ ॥

सप्ताधिकद्वादशशतानि१२०७पदानीत्यर्थः । इत्याश्वलायनानाम् । शाङ्खायनानां तु वालखिल्यसहितपदसङ्ख्योच्यते—

शाकल्यदृष्टे पदलक्षमेकं सार्द्धन्तु वेदे त्रिसहस्रयुक्तम् ।
शतानि सप्तैव तथाऽधिकानि चत्वारि त्रिंशच्च पदानि चर्चा ॥१॥

शाकल्यो माण्डूकगणस्थः । संहिता पदानि—एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतचतुस्त्रिंशदधिकानि १५३७३४ पदानीत्यर्थः ।

पदानि वालखिल्यस्य रुद्रसङ्ख्याशतानि च ।
षट्पञ्चाशदधिकानि वर्गाः सप्तदशास्तथा ॥ १ ॥

एकादशशतषट्पञ्चाशदधिकवालखिल्ये ११५६ पदानीत्यर्थः। अष्टपञ्चाशत्पादात्मकऋक्त्रयस्य 'यमृत्विजो' ( अष्ट० ६ अ० ४

वर्ग २९ ) वर्गो नास्ति । न तु हविष्पान्तीयसूक्ते ‘ द्वे समीची’ ( अष्ट० ८ अ० ४ वर्ग १३ ) वर्गे त्रिऋचानन्तरमेक एवाग्निर्ऋक्। ‘यमृत्विजो’ ऋक् खिलरूपेण पठन्ति । ‘ज्योतिष्मन्तम्’ ( अष्ट० ६ अ० ४ वर्ग २९ ) ऋचाभावः । ऋक्त्रयस्य तेषामन्ते पदाभावत्वात् । अन्ते वर्गसमाप्तौ यावन्मात्रमृचं पठन्ति । एवं ‘द्वे समीची’ इति षड्ऋचो वर्गः । आश्वलायनानां चतुर्ऋचात्मको वर्गः । इत्याश्वलायनशाङ्खायनशाखयोर्भेदरध्ययन इत्यर्थः । यस्य मन्त्रस्य पदाभावस्तस्य खैलिकत्वं सिद्धम् । तर्हि ‘त्र्यम्बकँ यजामहे’ (अष्ट० ५ अ० ४ वर्ग ३०) इति मन्त्रस्य पदाभावात्तस्य खैलिकत्वं सिद्धम् । न हि उभागानात् उपलेखायाम् । ‘त्र्यम्बकं ( अष्ट० ५ अ० ४ वर्ग ३० ), प्रथमम् ‘भद्रंनः’ (अष्ट० ७ अ० ७वर्ग २), ‘प्रजापते’ ( अष्ट० ८ अ ७ वर्ग ४ ), ‘ऋतंच’ ( अष्ट० ८ अ० ८ वर्ग ४० ) इति पदक्रममिममुभयाभिगीध्नम् । अर्द्धर्चान्तेपदगीतम् । तस्मात्पदकाले क्रमकाले च पठन्ति । “क्रमो द्वे पदश” इति वचनात् । अत्र द्वितीयपदं नास्ति अर्द्धर्चान्तसमापनात् । क्रमाभावः । तस्मात्पदकाले, क्रमकाले पठनं सएव पदक्रम इत्यर्थः । क्रमकाले तु वेष्टव्यं चतुस्त्रिंशत्सहस्राणि—

षत्वे, णत्वे च दीर्घत्वे आकारे सानुनासिके ।
त्रिचतुष्पञ्चक्रमे अर्द्धर्चान्ते च वेष्टयेत् ॥ १ ॥

क्रमेणोदाहरणानि ज्ञातव्यानि—‘सुषुमायातम्’ (अष्ट० २ अ० २ वर्ग १), ‘मो षुणः’ (अष्ट० १ अ० ३ वर्ग १६), ‘वाजेषु सासहिर्भव’ (अष्ट० ३ अ० २ वर्ग २२), ‘आँ उपानसः’ (अष्ट० ८ अ० ५ वर्ग २६ ), ‘न्याविध्यदिलीविशस्य’ ( अष्ट० १ अ० ३ वर्ग ३ ), ‘अगादारैगुकृष्णा’ ( अष्ट० १ अ० ८ वर्ग १ ), ‘निरुस्वसारमस्कृतोषसम्’ ( अष्ट० ८ अ० ७ वर्ग १४ ), ‘अग्निमीडे’ ‘ऋत्विजमित्यृत्विजम्’इति । चतुस्त्रिंशत्सहस्राणि ३४००० क्रमकाले

वेष्टनानीत्यथः ।

द्विखण्डानां सहस्राणां द्वात्रिंशत्षोडशोत्तरा ।

षोडशोत्तरद्वात्रिंशत्सहस्राणि ३२०१६ द्विखण्डानीत्यर्थः । चत्वारिंशत्सहस्राणि द्वात्रिंशतं चाक्षरसहस्राणि । चतुर्लक्षद्वात्रिंशत्सहस्राक्षराणि ४३२००० इत्यर्थः । द्वात्रिंशतं चाक्षरसहस्राणीत्यर्थसमाप्तेः पुनर्वचनमुक्तम् ।

अथ पारायणे ऋक्परिमाणा उच्यन्ते—

ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
ऋचामशीतिपादश्चैतत्पारायणमुच्यते ॥ १ ॥

एतत्पारायणं वालखिल्यैर्विना सङ्ख्यातम् । वालखिल्यानि पारायणे न सन्ति । तदुच्यते—ऋग्वेदान्तर्गत वालखिल्यमेकादश११सूक्तम् । सूक्तसहस्र१०००सप्तदशाधिक१७मित्यत्र ऋचां दशसहस्राणीत्येतत्सङ्ख्याव्यतिरिक्तानि वालखिल्यानीति प्रसिद्धिः । तत्र यज्ञानुष्ठाने ब्राह्मणे सूत्रे च श्रूयते—"वालखिल्याः शंसन्ति प्राणा वै वालखिल्या" (ऐ०ब्रा०६पञ्चि० २८खं०)इति । "अभि प्र वः सुराधसम् (अष्ट०६ अ०४ वर्ग १४) इति षड् वालखिल्यानां सूक्तानि" (ऐ०आर०५ खं० १०) इति ब्राह्मणे आरण्यके । 'अथ वालखिल्या विहरेत् तदुक्तं षोडशिना'इति सूत्रकारः । श्रौतस्मार्त्तसर्वकर्मानुष्ठाने वालखिल्यप्रसिद्धिः । वेदपारायणे वर्जमित्यर्थः । शौनकाचार्यवचनात् । यथा—मैषाध्याय, कुन्तपाध्याय, निविदाध्याय, सुपर्णाध्यायश्चेति । तद्वद्वालखिल्याध्याय इत्यर्थः । वालखिल्यसहितासर्वानुक्रमणीयमन्त्ररूपीऋक्सङ्ख्योच्यते—द्विपञ्चाशदधिकपञ्चशतदशसहस्राणीति१०५५२ । वालखिल्यव्यतिरिक्तसङ्ख्या तु—द्विसप्तत्यधिकचतुःशतदशसहस्रऋक् १०४७२ । एतत्सङ्ख्या नित्या द्विपदा नैमित्तिकद्विपदा सहिता उक्ता । हवनाध्ययनाभ्यां समाना सा नित्या द्विपदा । आसां

सङ्ख्या उपलेखायाम् । तच्च-'साधुः' (अष्ट०१ अ०५ वर्ग १४), 'असिक्न्यां' (अष्ट०३ अ०५ वर्ग २३), 'सिषक्तु न' (अष्ट०४ अ०२ वर्ग १६), 'उरौ देवा' (अष्ट०४ अ०२ वर्ग २१), 'उरौदेवा' (अष्ट०४ अ०२ वर्ग २२), 'विद्वेषांसी' (अष्ट०४ अ०५ वर्ग १२), 'अया वाजं' (अष्ट०४ अ०६ वर्ग ३), 'महिराधः' (अष्ट०४ अ०७ वर्ग३४), 'आवां सुम्ने' (अष्ट०५ अ०१ वर्ग४), 'ते ते देवाय' (अष्ट०५ अ०२ वर्ग२३), 'रायस्कामः' (अष्ट०५ अ०३ वर्ग१७), 'प्रति न स्तोमं' (अष्ट०५ अ०३ वर्ग२७), 'स्वाधु-धासः' (अष्ट०५ अ०४ वर्ग२४), 'पितुर्न पुत्रः' (अष्ट०६ अ०१ वर्ग३४), 'स नो वाजेषु' (अष्ट०६ अ०४ वर्ग३), 'गावो न यूथं' (अष्ट०६ अ०४ वर्ग६), 'पवस्व सोममन्दयन्' (अष्ट०७ अ०१ वर्ग १६) इति तिस्रः, 'परिसुवानो' (अष्ट०६ अ०८ वर्ग८), 'नृभिर्ये मा नः' (अष्ट०७ अ०५ वर्ग १५), 'प्रत्यश्वमर्कमनयञ्छचीभिः' (अष्ट०८ अ०८ वर्ग १५) इति द्विपदैकपदा द्वाविंशतिः । तासां सप्तदश १७ द्विपदा एकपदाः पञ्च ५ इति । हवनाध्ययने विप-रीता, सा नैमित्तिकद्विपदा । ता आह वर्गरूपेण—'पश्वानतायुं' (अष्ट०१ अ०५ वर्ग९) दश, 'रयिर्न' (अष्ट०१ अ०५ वर्ग१०) दश, 'वनेषु' (अष्ट०१ अ०५ वर्ग११) दश, 'श्रीणं' (अष्ट०१ अ०५ वर्ग१२) दश, 'शुक्रः शुशुक्वाँ' (अष्ट०१ अ०५ वर्ग१३) दश, 'वनेम पूर्वीः' (अष्ट०१ अ०५ वर्ग१४) दश, 'अग्ने त्वन्नः' (अ-ष्ट०४ अ०१ वर्ग१६) चत्वारि, 'अग्ने भव' (अष्ट०५ अ०२ वर्ग २३) षट्, 'प्रशुक्रैतु' ( अष्ट०५ अ०३ वर्ग २५ ) दश, 'राजा राष्ट्राणां' (अष्ट०५ अ०३ वर्ग२६) दश, 'क ईं व्यक्ता' (अष्ट०५ अ०४ वर्ग२३) दश, 'बभ्रुरेको' (अष्ट०६ अ०२ वर्ग२६) दश, 'परिप्रधन्व' (अष्ट०७ अ०५ वर्ग२०) दश, 'तन्ते सोतारो' (अष्ट०७ अ०५ वर्ग२१) द्वादश, 'इमा नुकं' (अष्ट०८ अ०८ वर्ग१५)

चत्वारि, 'आयाहि वनसा' (अष्ट०८ अ०८ वर्ग ३०) चत्वारीति नैमित्तिकद्विपदा चत्वारिंशोत्तरशतम् १४० इति।

हवने एकैका। अध्ययने द्वे द्वे। आसामन्त्या एका उर्वरिता सा नित्या द्विपदा। उक्तं च परिभाषायाम्—'विंशिका द्विपदा विराजस्तदूर्द्धमेकपदा द्विर्द्विपदास्त्वृचः समामनन्ति। आयुक्ष्वन्त्या द्विपदैव' (परिभा० १२खं) इति। द्विर्द्विपदास्त्वृचः समामनन्ति। यस्य सूक्तस्य द्विर्द्विपदाः समामनन्ति तास्त्वृचः अध्ययने चतुष्पदाः कृत्वेत्यर्थः। आयुक्ष्वान्त्या द्विपदैव। सूक्तस्यर्चा युजो या न भवति तास्त्वन्त्या नित्या द्विपदैव। एवमध्ययने द्वावर्द्धर्चे ऋगेव प्राधान्यम्। त्रीण्यर्द्धर्चायाः कथम्? तत्रापि द्वावर्द्धर्चावेका ऋचा। अर्द्धर्चा एका कर्तव्या। अध्ययनसम्प्रदायबलात्। 'अनादेशेऽष्टाक्षराः पादाश्चतुष्पदाश्चर्चे' (परिभा० ३खं०) इति परिभाषायाम्। अध्ययने त्रीण्यर्द्धर्चेऋगेव सम्प्रदायो नास्ति। आसां परिमाणमाह—'अग्निं होतारम्' (अष्ट०२ अ०१ वर्ग१२) पञ्च, 'सहिशर्द्धान' (अष्ट०२ अ०१ वर्ग१३) षड्, 'अयं जायत'(अष्ट०२ अ०१ वर्ग१४) पञ्च, 'विश्वो विहायाः' (अष्ट०२ अ०१ वर्ग१५) तिस्रः, 'यं त्वं रथम्' ( अष्ट०२ अ०१ वर्ग१६) पञ्च, 'प्रतद्वोचे यं' (अष्ट०२ अ०१ वर्ग१७) षट्, 'एन्द्रयाह्युप नः' (अष्ट०२ अ०१ वर्ग१८) पञ्च, 'इमां ते वाचं' (अष्ट०२ अ०१ वर्ग१९) चत्वारि, 'स नो नव्येभि' (अष्ट०२ अ०१ वर्ग१९) वर्जम्। 'इन्द्राय हि द्यौः' (अष्ट०२ अ०१ वर्ग२०) सप्त, 'त्वया वयं' (अष्ट०२ अ०१ वर्ग२१) षड्, 'अवर्म ह' (अष्ट०२ अ०१ वर्ग२२) एका, 'वनोति हि' (अष्ट०२ अ०१ वर्ग२२) एका, 'आत्वा जुवो' (अष्ट०२ अ०१ वर्ग२३) षट्, 'स्तीर्णम्' (अष्ट०२ अ०१ वर्ग२४) पञ्च, 'इमे वां सोमा' (अष्ट०२ अ०१ वर्ग२५) एका, 'इमे ये ते सुवायो वा' (अष्ट०२ अ०१ वर्ग२५) एका, 'प्रमुञ्ज्येष्ठम्' (अष्ट०२ अ०१

वर्ग२६) षट्, 'ऊती देवानाम्' (अष्ट०२ अ०१ वर्ग१६) वर्जम् । 'सुषुमायातम्' (अष्ट०९ अ०२ वर्ग१ ) त्रीणि, 'प्रप्रपूष्णः' (अष्ट०२ अ०२ वर्ग२) चतुष्कम् , 'अस्तु श्रौषट्' (अष्ट०२ अ०२ वर्ग३ ) चत्वारि, 'शचीभिर्नः' (अष्ट०२ अ०२ वर्ग३) वर्जम् । 'वृषन्निन्द्र' (अष्ट०२ अ०२ वर्ग४) पञ्च, 'ये देवासो' (अष्ट०२ अ०२ वर्ग४) वर्जम् । 'तवत्यन्नर्यम्' (अष्ट०२ अ०६ वर्ग२८) एका, 'सखे सखायम्' (अष्ट०३ अ०४ वर्ग१२) एका, 'अयारुचा' (अष्ट०७ अ०५ वर्ग२३) त्रीणि, एतास्त्रीणि त्रीण्यर्द्धर्चा ऋचा हवनीयाश्चतुर्नवतिसङ्ख्या । इति त्रीण्यर्द्धर्चे ऋग्यवने । अध्ययने अर्द्धर्चद्वयेन ऋगेका । अर्द्धर्चेनैकैव ऋग्द्वये कर्त्तव्य इत्यर्थः । एकर्चस्य ऋग्द्वयं विराट्छन्दो विना कथं भवति ? इत्याशङ्क्य तत्रोच्यते—विराट्छन्दः सर्वच्छन्दसि व्याप्तं वर्त्तते । उक्तं चारण्यके—"चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दः पुरुषो वेदपुरुषो महापुरुष इति" (शा० आर० अ०८ खं०३) । "तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुप्मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती" ( ऐ० आर० २ खण्ड ६ ) इति । "यान्येतानि विराट्चतुर्थान्येवमु हैवैवं विदुष एतदहः सर्वैश्छन्दोभिः प्रतिपन्नं भवति" ( ऐ० आर० १ खण्ड १२ ) इति प्राप्तो भवतीत्यर्थः । "गायत्रीश्च पङ्क्तीश्च व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशव" इति ब्राह्मणम् । अत्रोदाहरणम्—"पवस्व सोम मन्दयन् (अष्ट०७ अ०२ वर्ग १६) तिस्रो नित्यद्विपदा गायत्र्यः" इति सर्वानुक्रमण्याम् । "द्विपाद्वै पुरुषो वीर्यं त्रिष्टुब्विराड्भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयं पुरुषः" । अत्रोदाहरणानि—"आवां सुम्ने वरिमन्" (अष्ट०५ अ०१ वर्ग४), "प्रत्यञ्चमर्कमनयन्" (अष्ट०८ अ०८ वर्ग१५), "परिस्रुवानो गिरिष्ठाः" (अष्ट०६ अ०८ वर्ग८) जगती पाद इति । एवं सर्व-

ज्यांसो भवतीत्यर्थः। "छन्दांᳫंसि जज्ञिरे" इति श्रुतिः। तथा च शतपथब्राह्मणे—"किञ्छन्दः कादेवता प्रतिष्ठेऽइति द्विपदा छन्दो, विष्णुर्देवता प्रतिष्ठे" इति। यथा विष्णुः सर्वव्याप्तस्तथा विराट्छन्द इत्यर्थः। विराट् छन्दस्तु चतुष्पदा। त्रीण्यर्द्धर्चाणां पञ्चपदा ऋक्कर्चव्येति। किं प्रमाणम्? तत्रोच्यते—

एकपाद्भूयो द्विपदो विचक्रमे द्विपात्त्रिपादमभ्येति पश्चात्।
चतुष्पादेति द्विपदामभिस्वरे सम्पश्यन्पङ्क्तीरुपतिष्ठमानः॥
(अष्ट०८ अ०६ वर्ग २३)।

एकपदा द्विपदा नित्या द्विपात्त्रिपादमभ्येति। एकीभूता भवन्तीत्यर्थः। अस्योदाहरणम् "अग्निं होतारं मन्ये० दसम्। यऽऊर्द्धया० कृपा" (अष्ट०२ अ०१ वर्ग१२)। अग्रे अर्द्धर्चा—"घृतस्य विभ्राष्टिमनुवष्टि० सर्पिषः" (अष्ट०२ अ०१ वर्ग१२) इति द्विपदा। चतुष्पदातु—"पश्वानतायुम्०" (अष्ट०१ अ०५ वर्ग९)। एकार्द्धर्चा त्रिपदा, एकार्द्धर्चा द्विपदा, एका ऋक् पञ्चपदा अध्ययने। 'द्विर्द्विपदास्तृचः समामनन्ति' इत्यत्र समपादग्रहणात्। असमानपादा विरुद्धा, तर्हि पङ्क्तिश्छन्दो पञ्चपदा भवति। तस्य द्वितीयभेदो विराट्, तस्मात्पञ्चपादत्वं प्राप्तम्। समपादा वा असमपादो विराट्छन्द इत्यर्थः। अत्र श्रुतिः—

"समौ चिद्धस्तौ न समं विविष्टः सम्मातरा चिन्नसमं दुहाते" (अष्ट०८ अ०६ वर्ग२३) इत्यनया ऋचा परिहारः। दक्षिणवामहस्तौ समौ कर्तृत्वे असमावित्यर्थः। अथाध्ययने ऋक्सङ्ख्योच्यते-षण्णवत्यधिकचतुःशतदशसहस्राणीति १०४९६। ताः सहितनैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतसहितदशसहस्राणीति। १०५-६६। 'सञ्ज्ञानमुशनावदत्' सूक्तस्य पञ्चदशचैकीकृत्य १०५८० एवं पारायणे ऋक्सङ्ख्या। 'ऋचां दशसहस्राणि' इति वचनस्य सङ्ख्या पूर्णा भवतीत्यर्थः। एका उर्वरिता सा "भद्रन्नो अपि

बातयमनः" (अष्ट०७ अ०७ वर्ग२) इति पादाधिक्यमनुक्रमणिकावृत्तावप्युक्तेः । 'भद्रं पुच्छम् ( ऐ० आर० ५ खं० ८ ) इत्यारण्यके ।

अथ सञ्ज्ञानसूक्तम्—

सञ्ज्ञानमुशनाऽवदत्सञ्ज्ञानं वरुणोऽवदत् ।
सञ्ज्ञानमिन्द्रश्चाग्निश्च सञ्ज्ञानं सविता वदत् ॥ १ ॥
सञ्ज्ञानं नश्वेभ्यः सञ्ज्ञानमरणेभ्यः ।
सञ्ज्ञानमश्विना युवमिहास्मासु नियच्छताम् ॥ २ ॥
यत्कक्षीवांसं वननं पुत्रोऽअङ्गिरसाभवेत् ।
तेन नोऽद्य विश्वदेवाः सम्प्रियां समजीजनन् ॥ ३ ॥
संवो मनांसि जानतां समाकूतिर्मनामसि ।
असौ यो विमना मनः संसमावर्त्तयामसि ॥ ४ ॥
नैहस्त्यं सेनादरणं परिवर्त्मे तु यद्धविः ।
तेनाऽमित्राणां बाहून्हविषा शोषयामसि ॥ ५ ॥
परिवर्त्मान्येषामिन्द्रः पूषा च सस्रतुः ।
तेषां वोऽअग्निदग्धानामग्निमूढानामिन्द्रो हन्तु वरं वरम् ॥६॥
ऐषु नह्यवृषाजिनं हरिणस्य धियं यथा ।
पराँऽअमित्राँऽऐष त्वर्वाची गौरुपाजतु ॥ ७ ॥
प्राध्वराणां पते वसो होतर्वरेण्य क्रतो ।
तुभ्यं गायत्रमृच्यते ॥ ८ ॥
गोकामोऽअन्नकामः प्रजाकामऽउत कश्यपः ॥ ९ ॥
भूतं भविष्यत्प्रस्तौति सहब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरम् ॥१०॥
यदक्षरं भूतं कृतं विश्वेदेवाऽउपासते ।
महऽऋषिमस्यगोप्तारं जमदग्निरकुर्वतम् ॥ ११ ॥
जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः ।
राजा सोमस्य भक्षेण ब्रह्मणा वीर्यावताम् ॥ १२ ॥

शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिशः ।
अजो यत्तेजो ददृशे शुक्रं ज्योतिः परो गुहा ॥ १३ ॥

यदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरम् ध्रुवं ब्रह्मचराचरम् ।

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषम् ॥१४॥

यद्देवानां त्र्यायुषं तन्मेऽअस्तु त्र्यायुषं सर्वमस्तुशतायुषं बलायुषम् ॥ १५ ॥

(तच्छंयोरावृणी महे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवी स्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे ॥१॥)
(अष्ट०८ अ०८ परिशिष्ट)

इति सञ्ज्ञानसूक्तं पञ्चदशर्चात्मकम् । अस्य ग्रहणे प्रमाणमाश्वलायनसूत्रम् । तच्च–"समानीव" इत्येका, "तच्छंयोरावृणीमह" इत्येकेति । तथा च शाङ्खायनस्य कौषीतकिसूत्रम्–"अथोपाकरणमोषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाऽक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः सूक्तानुवाकाद्याभिरिति वाऽध्यायार्षेयाद्याभिरिति माण्डूकेयोऽथ ह स्माह कौषीतकिरग्निमीडे पुरोहितमित्येका कुषुम्भकस्तदब्रवीदावदँस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधिश्रितं गन्ता नो यज्ञं यज्ञियाः सुशमि यो न स्वोऽअरणः प्रतिचक्ष्वविचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजं घृतं हविरितिद्वृचौ वा तच्छँयोरावृणीमहइत्येका हुतशेषाद्धविः प्राश्नन्ति"(कौ०गृ०सू० ४ अ० ५खं०) इति । पञ्चशाखानां पारायणे 'तच्छँयोरावृणीमह' इत्यत्र समाप्तिरेकवेदत्वात् । उक्तञ्च—

ऋचां समूह ऋग्वेदस्तमभ्यस्य प्रयत्नतः ।
पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम् ॥

साङ्ख्याश्वलायनौ चैव माण्डूका बाष्कलास्तथा ।
बह्वृचा ऋषयः सर्वे पञ्चैते ह्येकवेदिनः ॥ इति ।

साङ्ख्यानाम शाङ्खायन इति ।

अथ पारायणे वर्गसङ्ख्योच्यते-'एकर्चं एकवर्गश्च एकर्चं नवकस्तथा' । एकर्चं एकवर्गो 'जातवेदसे' (अष्ट०१ अ०७ वर्ग७) इत्यर्थः । नवर्चं एकवर्गः 'आपो हि ष्ठा (अष्ट०७ अ०५ वर्ग५) इति । द्वौवर्गौ तु द्वृचौ ज्ञेयौ, द्वौ वर्गौ द्व्यृचावित्यर्थः । 'अग्ने त्वं नोऽअन्तमः' (अष्ट०४ अ०१ वर्ग१६), 'आयाहि वनसा सह' (अष्ट०८ अ०८ वर्ग३०) इति । ऋक्त्रयस्य शतं स्मृतम् । तृचो वर्गाः शतमित्यर्थः १०० । 'उतत्यं चमसं नवम्' (अष्ट०१ अ०२ वर्ग२) इत्यादि ।

चतुर्ऋचां पञ्चसप्तत्यधिकं च शतं तथा ।

चतुर्ऋचवर्गाः पञ्चसप्तत्यधिकशत१७५मित्यर्थः । 'यदङ्ग दाशुषे त्वम्' (अष्ट०१ अ०१ वर्ग२) इत्यादि ।

पञ्चर्चं तु द्विशतकं सहस्रं रुद्रसंयुतम् ।

पञ्चर्चवर्गा एकादशाधिकद्वादशशतानीत्यर्थः १२११ । 'अग्निमीडे' इत्यादि,

पञ्चचत्वार्यधिकं तु षड्ऋचां तु शतत्रयम् ।

षड्ऋचवर्गाः पञ्चचत्वारिंशदधिकशतत्रय ३४५ इत्यर्थः । 'अश्विना यज्वरीरिष' (अष्ट०१अ०१वर्ग५) इत्यादि,

सप्त ऋचां शतं ज्ञेयं विंशतिश्चाधिकाः स्मृताः ।
सप्तर्चवर्गा विंशत्यधिकशत१२० इत्यर्थः ॥

'यच्चिद्धि सत्यसोमपा' (अष्ट०१अ०२वर्ग२७) इत्यादि,

अष्टऋचां तु पञ्चाशत्पञ्चाधिकास्तथैव च ।

अष्टर्चवर्गाः पञ्चाधिकपञ्चशत ५०५ इत्यर्थः । 'इन्द्रं विश्वाऽअवीवृधन्' (अष्ट०१ अ०१ वर्ग२१) इत्यादि । एवं दशा-

धिकसहस्रद्वयवर्गा २०१० इत्यर्थः। पञ्चशाखासु निश्चिताः। पञ्चशाखानां पारायणे निश्चयेन इत्यर्थः।

वर्गाः सञ्ज्ञानसूक्तस्य चत्वारश्चात्र मीलिताः।

सञ्ज्ञानसूक्तस्य चत्वारोवर्गाश्चात्र मिलित्वा दशाधिकसहस्रद्वयमित्यर्थः।

एवं पारायणे प्रोक्ता ऋचां सङ्ख्येन न्यूनतः।

एवं पूर्वोक्तप्रकारेण वर्गस्य ऋक्न्यूनसङ्ख्येन दशर्चस्य पञ्चऋक् त्रीण्यर्द्धर्चस्य ऋक्कर्तव्येत्यर्थः। एवं चतुर्विधपारायणेऽपि ज्ञेयम्। 'समानीव' (अष्ट०८ अ०८ वर्ग४९) इति शाकलानां, 'तच्छँय्योरिति' बाष्कलानामित्यत्र बाष्कलशाखाध्ययनमनुक्रमणिकावृत्तावुक्तम्। तच्च—

गौतमादौशिजः कुत्सः पारुच्छेपाद्वषेः परः।

कुत्सादीर्घतमेत्येवं बाष्कलाध्ययने क्रमः॥

अस्यार्थः—गौतमादौशिजः कुत्सः। 'उपप्रयन्तो' (अष्ट०१अ० ५वर्ग२१), 'नासत्याभ्याम्' (अष्ट०१ अ०८ वर्ग८), 'अग्निं होतारम्' (अष्ट०२ अ०१ वर्ग१२), 'इमं स्तोमम्' (अष्ट०२ अ०७ वर्ग६); 'वेदिषदे' (अष्ट०२ अ०२ वर्ग५) एष बाष्कलक्रम इत्यर्थः। अत्रैवमुक्ते उत्तममण्डले नवके अनुक्रमविपर्यासः। तच—'स्वादोरभक्षि' (अष्ट०६अ० ४ वर्ग२१) सूक्तान्ते 'अभिप्रवः सुराधसम्' (अष्ट०६ अ०४ वर्ग १४), 'प्र सुश्रुतम्' (अष्ट०६ अ०४ वर्ग १६) इति सूक्तद्वयं पठित्वा, 'अग्नऽआयाह्यग्निभिः' (अष्ट०६ अ०४ वर्ग३२) इति पठेत्। ततः 'आप्र द्रव' (अष्ट०६ अ०६ वर्ग१) अध्याये 'गौर्धयति' (अष्ट०६ अ०६ वर्ग २८) अनुवाको दशसूक्तात्मकः शाकलस्य। पञ्चदशसूक्तात्मको बाष्कलस्य। तत्रोच्यते—'गौर्धयति' सूक्तानन्तरं 'यथा मनौ सांवरणौ' (अष्ट०६ अ०४ वर्ग१८), 'यथा मनौ विवस्वति' (अष्ट०६ अ०४ वर्ग२०), 'उपमन्त्वा' (अष्ट०६ अ०४ वर्ग२२), 'एतत्तऽइन्द्र' (अष्ट०६ अ०४ वर्ग २४), 'भूरिदिन्द्रस्य'

(अष्ट०६ अ०४ वर्ग२६) इत्यन्तानि पञ्चसूक्तानि पठित्वा, 'आत्वा- गिरो रथीरिव' (अष्ट०६ अ०६ वर्ग३०) इति पठेयुः। अन्ते-'सं- समित्' (अष्ट०८ अ०८ वर्ग४२) सूक्तानन्तरं पञ्चदशर्चात्मकं 'सञ्ज्ञानमुशनावदत्' इत्यादि 'तच्छंय्योरावृणीमहे' इत्यन्तं वेदस- माप्तिरिति बाष्कलशाखाध्ययनम्। एवमध्ययनाभावाच्छाखाऽभाव इत्यर्थः। सूक्तसहस्रसप्तदशाधिकात् अष्टौ सूक्तानि बाष्कलस्या- धिकानीत्यर्थः। 'प्रति ते' (अष्ट०६अ०४ वर्ग२७), 'युवं देवा' (अष्ट०६अ०४ वर्ग२८), 'यमृत्विजो' (अष्ट०६अ०४ वर्ग२९), 'इमानिवाम्' (अष्ट०६अ०४ वर्ग३०) इति चत्वारि बालखिल्य- सूक्तानां लोप इत्यर्थः।

यस्तानृग्वेदचैवाप्यधीते स नाकपृष्ठं भजते ह शश्वत्।

अस्यार्थः यः तान् ऋगर्थवित् वेद विदितः हवने पारायणे च अधीते सः वेदिताऽध्येता च नाकपृष्ठं शश्वत्सदा भजते। ह प्रसिद्धौ। इतोऽमुं लोकमेत्युत तस्मान्न प्रच्यवते हीत्यर्थः।

अथ पारायणफलं तदुक्तमारण्यके-"यद्धि सन्धिं विवर्तयति तं निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य रूपमग्रऽउऽएत्रोभयमन्तरेणोभयव्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेणेति"।

अस्यार्थः-द्वयोः पदयोरक्षरयोर्वाऽपि सन्धिस्तस्य अविच्छे- दाध्ययनं तन्निर्भुजं संहितापारायणमुच्यते। शुद्धे द्वे पदे अक्षरे वा सन्धिमकुर्वतोच्चारणं तत्प्रतृण्णं तत्पदपारायणम्। संहितापदाभ्या- मुभाभ्यां व्याप्तमुभयमन्तरेण क्रमपारायणमित्यर्थः। तथा च सति, त्रिभिः कृत्वा स्वरास्वरं विजानाति मात्रामात्रां विभजन्ते सा संहि- तेति। एवमेतां संहितां यो वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेतीति। तस्मात्क्रमादृते द्वे पदे संहिता द्वे पदस्वरश्च न सिध्यति। द्वे पदसिद्धे उत्तरारम्भः कर्तुं

न शक्यते । अतश्च पादार्द्धर्चैकऋक्, सूक्तसिध्यर्थं भगवता पाञ्चालेन स्थापितानां पारायणकर्मणां क्रमपारायणमुत्तमं भवतीति च । अत्र श्लोकः—गागार्थेन पुरा दानं दृष्ट्वा क्रुद्धो महामुनिः ।

अर्थवन्तं क्रमं ब्रूयादेवतायाश्च शास्त्रतः ॥

अतो ऋग्यजुषां बृंहणं पदैः स्वरैश्चाध्ययनं तथा त्रिभिः ।

अतोऽपि अस्मादपि हेतोः क्रमः अर्थवान्भवति । क्रमेण कृत्वा ऋग्वेदपारायणे ऋचां बृंहणं साधारणं भवति । इदमित्थमेव पाठ इति स्वरमात्रादिरूपेण निश्चयो भवति । तथा यजुर्वेदपारायणे यजुषां बृंहणं नाम साधारणं स्वरमात्रादिरूपेण इदमित्थमेव पाठ इति निश्चयो भवति, इत्यतिदेशः । इत्यलं प्रपञ्चेन ।

अथ पारायणविधिः । अत्रादौ कलशस्थापनाद्युक्तं महार्णवे—

तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते ।
कलशं सुदृढं तत्र सुनिर्णिक्तं सुभूषितम् ॥ १ ॥
पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः ।
मृत्तिकायवसम्मिश्रं वेदमध्ये न्यसेत्ततः ॥ २ ॥
पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः ।
स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ॥ ३ ॥
वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम् ।
ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् ॥ ४ ॥
प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते ।
यज्ञोपवीतं नैवेद्यं वस्त्रचन्दनकुङ्कुमैः ॥ ५ ॥
स्रग्धूपदीपताम्बूलै(१)रेतैश्चापि पितामहम् ।
ब्रह्मयज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥ ६ ॥
उपाध्यायं च सम्पूज्य यथापाठं पठेत्ततः ॥

ततो होमादि वक्ष्यमाणं कृत्वापठेदित्यर्थः । तत्रैव बौधायनः—

'स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय तं परिस्तीर्याज्येनै-

(१) 'रक्षतैश्च पितामहम्' इ० पा० ।

